श्रीपरशुरामसहस्रनामावलिः
अथ विनियोगः ।
ॐ अस्य श्रीजामदग्न्यसहस्रनामावलिमहामन्त्रस्य श्रीराम ऋषिः ।
जामदग्न्यः परमात्मा देवता ।
अनुष्टुप् छन्दः । श्रीमदविनाशरामप्रीत्यर्थं
चतुर्विधपुरुषार्थसिद्ध्यर्थं जपे विनियोगः ॥

अथ करन्यासः ।
ॐ ह्रां गोविन्दात्मने अङ्गुष्ठाभ्यां नमः ।
ॐ ह्रीं महीधरात्मने तर्जनीभ्यां नमः ।
ॐ ह्रूं हृषीकेशात्मने मध्यमाभ्यां नमः ।
ॐ ह्रैं त्रिविक्रमात्मने अनामिकाभ्यां नमः ।
ॐ ह्रौं विष्ण्वात्मने कनिष्ठिकाभ्यां नमः ।
ॐ ह्रः माधवात्मने करतलकरपृष्ठाभ्यां नमः ॥

अथ हृदयन्यासः ।
ॐ ह्रां गोविन्दात्मने हृदयाय नमः ।
ॐ ह्रीं महीधरात्मने शिरसे स्वाहा ।
ॐ ह्रूं हृषीकेशात्मने शिखायै वषट् ।
ॐ ह्रैं त्रिविक्रमात्मने कवचाय हुम् ।
ॐ ह्रौं विष्ण्वात्मने नेत्रत्रयाय वौषट् ।
ॐ ह्रः माधवात्मने अस्त्राय फट् ।
अथ ध्यानम् ।
शुद्धजाम्बूनदनिभं ब्रह्मविष्णुशिवात्मकम् ।
सर्वाभरणसंयुक्तं कृष्णाजिनधरं विभुम् ॥ १॥

बाणचापौ च परशुमभयं च चतुर्भुजैः ।
प्रकोष्ठशोभि रुद्राक्षैर्दधानं भृगुनन्दनम् ॥ २॥

हेमयज्ञोपवीतं च स्निग्धस्मितमुखाम्बुजम् ।
दर्भाञ्चितकरं देवं क्षत्रियक्षयदीक्षितम् ॥ ३॥

श्रीवत्सवक्षसं रामं ध्यायेद्वै ब्रह्मचारिणम् ।
हृत्पुण्डरीकमध्यस्थं सनकाद्यैरभिष्टुतम् ॥ ४॥

सहस्रमिव सूर्याणामेकीभूय पुरः स्थितम् ।
तपसामिव सन्मूर्तिं भृगुवंशतपस्विनम् ॥ ५॥

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्निग्धपवित्रलाञ्छनवपुर्धत्ते त्वचं रौरवीम् ।
मौञ्ज्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकम्
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं परं पैप्पलम् ॥ ६॥

रेणुकाहृदयानन्दं भृगुवंशतपस्विनम् ।
क्षत्रियाणामन्तकं पूर्णं जामदग्न्यं नमाम्यहम् ॥ ७॥

अव्यक्तव्यक्तरूपाय निर्गुणाय गुणात्मने ।
समस्तजगदाधारमूर्तये ब्रह्मणे नमः ॥ ८॥

॥ श्रीपरशुरामद्वादशनामानि ॥

हरिः परशुधारी च रामश्च भृगुनन्दनः ।
एकवीरात्मजो विष्णुर्जामदग्न्यः प्रतापवान् ॥

सह्याद्रिवासी वीरश्च क्षत्रजित्पृथिवीपतिः ।
इति द्वादशनामानि भार्गवस्य महात्मनः ।
यस्त्रिकाले पठेन्नित्यं सर्वत्र विजयी भवेत् ॥

अथ श्रीपरशुरामसहस्रनामावलिः ।
ॐ रामाय नमः ।
ॐ श्रीमते नमः ।
ॐ महाविष्णवे नमः ।
ॐ भार्गवाय नमः ।
ॐ जमदग्निजाय नमः ।
ॐ तत्त्वरूपिणे नमः ।
ॐ परस्मै नमः ।
ॐ ब्रह्मणे नमः ।
ॐ शाश्वताय नमः ।
ॐ सर्वशक्तिधृषे नमः । १०
ॐ वरेण्याय नमः ।
ॐ वरदाय नमः ।
ॐ सर्वसिद्धिदाय नमः ।
ॐ कञ्जलोचनाय नमः ।
ॐ राजेन्द्राय नमः ।
ॐ सदाचाराय नमः ।
ॐ जामदग्न्याय नमः ।

ॐ परात्पराय नमः ।
ॐ परमार्थैकनिरताय नमः ।
ॐ जितामित्राय नमः । २०
ॐ जनार्दनाय नमः ।
ॐ ऋषिप्रवरवन्द्याय नमः ।
ॐ दान्ताय नमः ।
ॐ शत्रुविनाशनाय नमः ।
ॐ सर्वकर्मणे नमः ।
ॐ पवित्राय नमः ।
ॐ अदीनाय नमः ।
ॐ दीनसाधकाय नमः ।
ॐ अभिवाद्याय नमः ।
ॐ महावीराय नमः । ३०
ॐ तपस्विने नमः ।
ॐ नियमप्रियाय नमः ।
ॐ स्वयम्भुवे नमः ।
ॐ सर्वरूपाय नमः ।
ॐ सर्वात्मने नमः ।
ॐ सर्वदृशे नमः ।
ॐ प्रभवे नमः ।
ॐ ईशानाय नमः ।
ॐ सर्वदेवादये नमः ।
ॐ वरीयसे नमः । ४०
ॐ सर्वगाय नमः ।
ॐ अच्युताय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ सर्ववेदादये नमः ।
ॐ शरण्याय नमः ।
ॐ परमेश्वराय नमः ।
ॐ ज्ञानभाव्याय नमः ।
ॐ अपरिच्छेद्याय नमः ।
ॐ शुचये नमः ।
ॐ वाग्मिने नमः । ५०
ॐ प्रतापवते नमः ।
ॐ जितक्रोधाय नमः ।
ॐ गुडाकेशाय नमः ।
ॐ द्युतिमते नमः ।
ॐ अरिमर्दनाय नमः ।

ॐ रेणुकातनयाय नमः ।
ॐ साक्षादजिताय नमः ।
ॐ अव्ययाय नमः ।
ॐ विपुलांसाय नमः ।
ॐ महोरस्काय नमः । ६०
ॐ अतीन्द्राय नमः ।
ॐ वन्द्याय नमः ।
ॐ दयानिधये नमः ।
ॐ अनादये नमः ।
ॐ भगवते नमः ।
ॐ इन्द्राय नमः ।
ॐ सर्वलोकारिमर्दनाय नमः ।
ॐ सत्याय नमः ।
ॐ सत्यव्रताय नमः ।
ॐ सत्यसन्धाय नमः । ७०
ॐ परमधार्मिकाय नमः ।
ॐ लोकात्मने नमः ।
ॐ लोककृते नमः ।
ॐ लोकवन्द्याय नमः ।
ॐ सर्वमयाय नमः ।
ॐ निधये नमः ।
ॐ वश्याय नमः ।
ॐ दयायै नमः ।
ॐ सुधिये नमः ।
ॐ गोप्त्रे नमः । ८०
ॐ दक्षाय नमः ।
ॐ सर्वैकपावनाय नमः ।
ॐ ब्रह्मण्याय नमः ।
ॐ ब्रह्मचारिणे नमः ।
ॐ ब्रह्मणे नमः ।
ॐ ब्रह्मप्रकाशकाय नमः ।
ॐ सुन्दराय नमः ।
ॐ अजिनवाससे नमः ।
ॐ ब्रह्मसूत्रधराय नमः ।
ॐ समाय नमः । ९०
ॐ सौम्याय नमः ।
ॐ महर्षये नमः ।
ॐ शान्ताय नमः ।

ॐ मौञ्जीभृते नमः ।
ॐ दण्डधारकाय नमः ।
ॐ कोदण्डिने नमः ।
ॐ सर्वजिते नमः ।
ॐ शत्रुदर्पाघ्ने नमः ।
ॐ पुण्यवर्धनाय नमः ।
ॐ कवये नमः । १००
ॐ ब्रह्मर्षये नमः ।
ॐ वरदाय नमः ।
ॐ कमण्डलुधराय नमः ।
ॐ कृतिने नमः ।
ॐ महोदाराय नमः ।
ॐ अतुलाय नमः ।
ॐ भाव्याय नमः ।
ॐ जितषड्वर्गमण्डलाय नमः ।
ॐ कान्ताय नमः ।
ॐ पुण्याय नमः । ११०
ॐ सुकीर्तये नमः ।
ॐ द्विभुजाय नमः ।
ॐ आदिपूरुषाय नमः ।
ॐ अकल्मषाय नमः ।
ॐ दुराराध्याय नमः ।
ॐ सर्वावासाय नमः ।
ॐ कृतागमाय नमः ।
ॐ वीर्यवते नमः ।
ॐ स्मितभाषिणे नमः ।
ॐ निवृत्तात्मने नमः । १२०
ॐ पुनर्वसवे नमः ।
ॐ अध्यात्मयोगकुशलाय नमः ।
ॐ सर्वायुधविशारदाय नमः ।
ॐ यज्ञस्वरूपिणे नमः ।
ॐ यज्ञेशाय नमः ।
ॐ यज्ञपालाय नमः ।
ॐ सनातनाय नमः ।
ॐ घनश्यामाय नमः ।
ॐ स्मृतये नमः ।
ॐ शूराय नमः । १३०
ॐ जरामरणवर्जिताय नमः ।

ॐ धीराय नमः ।
ॐ दान्ताय नमः ।
ॐ सुरूपाय नमः ।
ॐ सर्वतीर्थमयाय नमः ।
ॐ विधये नमः ।
ॐ वर्णिने नमः ।
ॐ वर्णाश्रमगुरवे नमः ।
ॐ सर्वजिते नमः ।
ॐ पुरुषाय नमः । १४०
ॐ अव्ययाय नमः ।
ॐ शिवशिक्षापराय नमः ।
ॐ युक्ताय नमः ।
ॐ परमात्मने नमः ।
ॐ परायणाय नमः ।
ॐ प्रमाणाय नमः ।
ॐ रूपाय नमः ।
ॐ दुर्ज्ञेयाय नमः ।
ॐ पूर्णाय नमः ।
ॐ क्रूराय नमः । १५०
ॐ क्रतवे नमः ।
ॐ विभवे नमः ।
ॐ आनन्दाय नमः ।
ॐ गुणश्रेष्ठाय नमः ।
ॐ अनन्तदृष्टये नमः ।
ॐ गुणाकराय नमः ।
ॐ धनुर्धराय नमः ।
ॐ धनुर्वेदाय नमः ।
ॐ सच्चिदानन्दविग्रहाय नमः ।
ॐ जनेश्वराय नमः । १६०
ॐ विनीतात्मने नमः ।
ॐ महाकायाय नमः ।
ॐ तपस्विराजे नमः ।
ॐ अखिलाद्याय नमः ।
ॐ विश्वकर्मणे नमः ।
ॐ विनीतात्मने नमः ।
ॐ विशारदाय नमः ।
ॐ अक्षराय नमः ।
ॐ केशवाय नमः ।

ॐ साक्षिणे नमः । १७०
ॐ मरीचये नमः ।
ॐ सर्वकामदाय नमः ।
ॐ कल्याणाय नमः ।
ॐ प्रकृतिकल्पाय नमः ।
ॐ सर्वेशाय नमः ।
ॐ पुरुषोत्तमाय नमः ।
ॐ लोकाध्यक्षाय नमः ।
ॐ गभीराय नमः ।
ॐ सर्वभक्तवरप्रदाय नमः ।
ॐ ज्योतिषे नमः । १८०
ॐ आनन्दरूपाय नमः ।
ॐ वह्नये नमः ।
ॐ अक्षयाय नमः ।
ॐ आश्रमिणे नमः ।
ॐ भूर्भुवःस्वस्तपोमूर्तये नमः ।
ॐ रवये नमः ।
ॐ परशुधृषे नमः ।
ॐ स्वराजे नमः ।
ॐ बहुश्रुताय नमः ।
ॐ सत्यवादिने नमः । १९०
ॐ भ्राजिष्णवे नमः ।
ॐ सहनाय नमः ।
ॐ बलाय नमः ।
ॐ सुखदाय नमः ।
ॐ कारणाय नमः ।
ॐ भोक्त्रे नमः ।
ॐ भवबन्धविमोक्षकृते नमः ।
ॐ संसारतारकाय नमः ।
ॐ नेत्रे नमः ।
ॐ सर्वदुःखविमोक्षकृते नमः । २००
ॐ देवचूडामणये नमः ।
ॐ कुन्दाय नमः ।
ॐ सुतपसे नमः ।
ॐ ब्रह्मवर्धनाय नमः ।
ॐ नित्याय नमः ।
ॐ नियतकल्याणाय नमः ।
ॐ शुद्धात्मने नमः ।

ॐ पुरातनाय नमः ।
ॐ दुःस्वप्ननाशनाय नमः ।
ॐ नीतये नमः । २१०
ॐ किरीटिने नमः ।
ॐ स्कन्ददर्पहृते नमः ।
ॐ अर्जुनाय नमः ।
ॐ प्राणघ्ने नमः ।
ॐ वीराय नमः ।
ॐ सहस्रभुजजिते नमः ।
ॐ हरये नमः ।
ॐ क्षत्रियान्तकराय नमः ।
ॐ शूराय नमः ।
ॐ क्षितिभारकरान्तकृते नमः । २२०
ॐ परश्वधधराय नमः ।
ॐ धन्विने नमः ।
ॐ रेणुकावाक्यतत्पराय नमः ।
ॐ वीरघ्ने नमः ।
ॐ विषमाय नमः ।
ॐ वीराय नमः ।
ॐ पितृवाक्यपरायणाय नमः ।
ॐ मातृप्राणदाय नमः ।
ॐ ईशाय नमः ।
ॐ धर्मतत्त्वविशारदाय नमः । २३०
ॐ पितृक्रोधहराय नमः ।
ॐ क्रोधाय नमः ।
ॐ सप्तजिह्वसमप्रभाय नमः ।
ॐ स्वभावभद्राय नमः ।
ॐ शत्रुघ्नाय नमः ।
ॐ स्थाणवे नमः ।
ॐ शम्भवे नमः ।
ॐ केशवाय नमः ।
ॐ स्थविष्ठाय नमः ।
ॐ स्थविराय नमः । २४०
ॐ बालाय नमः ।
ॐ सूक्ष्माय नमः ।
ॐ लक्ष्यद्युतये नमः ।
ॐ महते नमः ।
ॐ ब्रह्मचारिणे नमः ।

ॐ विनीतात्मने नमः ।
ॐ रुद्राक्षवलयाय नमः ।
ॐ सुधिये नमः ।
ॐ अक्षकर्णाय नमः ।
ॐ सहस्रांशवे नमः । २५०
ॐ दीप्ताय नमः ।
ॐ कैवल्यतत्पराय नमः ।
ॐ आदित्याय नमः ।
ॐ कालरुद्राय नमः ।
ॐ कालचक्रप्रवर्तकाय नमः ।
ॐ कवचिने नमः ।
ॐ कुण्डलिने नमः ।
ॐ खड्गिने नमः ।
ॐ चक्रिणे नमः ।
ॐ भीमपराक्रमाय नमः । २६०
ॐ मृत्युञ्जयाय नमः ।
ॐ वीरसिंहाय नमः ।
ॐ जगदात्मने नमः ।
ॐ जगद्गुरवे नमः ।
ॐ अमृत्यवे नमः ।
ॐ जन्मरहिताय नमः ।
ॐ कालज्ञानिने नमः ।
ॐ महापटवे नमः ।
ॐ निष्कलङ्काय नमः ।
ॐ गुणग्रामाय नमः । २७०
ॐ अनिर्विण्णाय नमः ।
ॐ स्मररूपधृषे नमः ।
ॐ अनिर्वेद्याय नमः ।
ॐ शतावर्ताय नमः ।
ॐ दण्डाय नमः ।
ॐ दमयित्रे नमः ।
ॐ दमाय नमः ।
ॐ प्रधानाय नमः ।
ॐ तारकाय नमः ।
ॐ धीमते नमः । २८०
ॐ तपस्विने नमः ।
ॐ भूतसारथये नमः ।
ॐ अहसे नमः ।

ॐ संवत्सराय नमः ।
ॐ योगिने नमः ।
ॐ संवत्सरकराय नमः ।
ॐ द्विजाय नमः ।
ॐ शाश्वताय नमः ।
ॐ लोकनाथाय नमः ।
ॐ शाखिने नमः । २९०
ॐ दण्डिने नमः ।
ॐ बलिने नमः ।
ॐ जटिने नमः ।
ॐ कालयोगिने नमः ।
ॐ महानन्दाय नमः ।
ॐ तिग्ममन्यवे नमः ।
ॐ सुवर्चसे नमः ।
ॐ अमर्षणाय नमः ।
ॐ मर्षणात्मने नमः ।
ॐ प्रशान्तात्मने नमः । ३००
ॐ हुताशनाय नमः ।
ॐ सर्ववाससे नमः ।
ॐ सर्वचारिणे नमः ।
ॐ सर्वाधाराय नमः ।
ॐ विरोचनाय नमः ।
ॐ हैमाय नमः ।
ॐ हेमकराय नमः ।
ॐ धर्माय नमः ।
ॐ दुर्वाससे नमः ।
ॐ वासवाय नमः । ३१०
ॐ यमाय नमः ।
ॐ उग्रतेजसे नमः ।
ॐ महातेजसे नमः ।
ॐ जयाय नमः ।
ॐ विजयाय नमः ।
ॐ कालजिते नमः ।
ॐ सहस्रहस्ताय नमः ।
ॐ विजयाय नमः ।
ॐ दुर्धराय नमः ।
ॐ यज्ञभागभुजे नमः । ३२०
ॐ अग्नये नमः ।

ॐ ज्वालिने नमः ।
ॐ महाज्वालाय नमः ।
ॐ अतिधूमाय नमः ।
ॐ हुताय नमः ।
ॐ हविषे नमः ।
ॐ स्वस्तिदाय नमः ।
ॐ स्वस्तिभागाय नमः ।
ॐ महते नमः ।
ॐ भर्गाय नमः । ३३०
ॐ पराय नमः ।
ॐ यूने नमः ।
ॐ महत्पादाय नमः ।
ॐ महाहस्ताय नमः ।
ॐ बृहत्कायाय नमः ।
ॐ महायशसे नमः ।
ॐ महाकट्यै नमः ।
ॐ महाग्रीवाय नमः ।
ॐ महाबाहवे नमः ।
ॐ महाकराय नमः । ३४०
ॐ महानासाय नमः ।
ॐ महाकम्बवे नमः ।
ॐ महामायाय नमः ।
ॐ पयोनिधये नमः ।
ॐ महावक्षसे नमः ।
ॐ महौजसे नमः ।
ॐ महाकेशाय नमः ।
ॐ महाजनाय नमः ।
ॐ महामूर्ध्ने नमः ।
ॐ महामात्राय नमः । ३५०
ॐ महाकर्णाय नमः ।
ॐ महाहनवे नमः ।
ॐ वृक्षाकाराय नमः ।
ॐ महाकेतवे नमः ।
ॐ महादंष्ट्राय नमः ।
ॐ महामुखाय नमः ।
ॐ एकवीराय नमः ।
ॐ महावीराय नमः ।
ॐ वसुदाय नमः ।

ॐ कालपूजिताय नमः । ३६०
ॐ महामेघनिनादिने नमः ।
ॐ महाघोषाय नमः ।
ॐ महाद्युतये नमः ।
ॐ शैवाय नमः ।
ॐ शैवागमाचारिणे नमः ।
ॐ हैहयानां कुलान्तकाय नमः ।
ॐ सर्वगुह्यमयाय नमः ।
ॐ वज्रिणे नमः ।
ॐ बहुलाय नमः ।
ॐ कर्मसाधनाय नमः । ३७०
ॐ कामिने नमः ।
ॐ कपये नमः ।
ॐ कामपालाय नमः ।
ॐ कामदेवाय नमः ।
ॐ कृतागमाय नमः ।
ॐ पञ्चविंशतितत्त्वज्ञाय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ सर्वगोचराय नमः ।
ॐ लोकनेत्रे नमः ।
ॐ महानादाय नमः । ३८०
ॐ कालयोगिने नमः ।
ॐ महाबलाय नमः ।
ॐ असङ्ख्येयाय नमः ।
ॐ अप्रमेयात्मने नमः ।
ॐ वीर्यकृते नमः ।
ॐ वीर्यकोविदाय नमः ।
ॐ वेदवेद्याय नमः ।
ॐ वियद्गोप्त्रे नमः ।
ॐ सर्वामरमुनीश्वराय नमः ।
ॐ सुरेशाय नमः । ३९०
ॐ शरणाय नमः ।
ॐ शर्मणे नमः ।
ॐ शब्दब्रह्मणे नमः ।
ॐ सतां गतये नमः ।
ॐ निर्लेपाय नमः ।
ॐ निष्प्रपञ्चात्मने नमः ।
ॐ निर्व्यग्राय नमः ।

ॐ व्यग्रनाशनाय नमः ।
ॐ शुद्धाय नमः ।
ॐ पूताय नमः । ४००
ॐ शिवारम्भाय नमः ।
ॐ सहस्रभुजजिते नमः ।
ॐ हरये नमः ।
ॐ निरवद्यपदोपायाय नमः ।
ॐ सिद्धिदाय नमः ।
ॐ सिद्धिसाधनाय नमः ।
ॐ चतुर्भुजाय नमः ।
ॐ महादेवाय नमः ।
ॐ व्यूढोरस्काय नमः ।
ॐ जनेश्वराय नमः । ४१०
ॐ द्युमणये नमः ।
ॐ तरणये नमः ।
ॐ धन्याय नमः ।
ॐ कार्तवीर्यबलापघ्ने नमः ।
ॐ लक्ष्मणाग्रजवन्द्याय नमः ।
ॐ नराय नमः ।
ॐ नारायणाय नमः ।
ॐ प्रियाय नमः ।
ॐ एकज्योतिषे नमः ।
ॐ निरातङ्काय नमः । ४२०
ॐ मत्स्यरूपिणे नमः ।
ॐ जनप्रियाय नमः ।
ॐ सुप्रीताय नमः ।
ॐ सुमुखाय नमः ।
ॐ सूक्ष्माय नमः ।
ॐ कूर्माय नमः ।
ॐ वाराहकाय नमः ।
ॐ व्यापकाय नमः ।
ॐ नारसिंहाय नमः ।
ॐ बलिजिते नमः । ४३०
ॐ मधुसूदनाय नमः ।
ॐ अपराजिताय नमः ।
ॐ सर्वसहाय नमः ।
ॐ भूषणाय नमः ।
ॐ भूतवाहनाय नमः ।

ॐ निवृत्ताय नमः ।
ॐ संवृत्ताय नमः ।
ॐ शिल्पिने नमः ।
ॐ क्षुद्रघ्ने नमः ।
ॐ नित्याय नमः । ४४०
ॐ सुन्दराय नमः ।
ॐ स्तव्याय नमः ।
ॐ स्तवप्रियाय नमः ।
ॐ स्तोत्रे नमः ।
ॐ व्यासमूर्तये नमः ।
ॐ अनाकुलाय नमः ।
ॐ प्रशान्तबुद्धये नमः ।
ॐ अक्षुद्राय नमः ।
ॐ सर्वसत्त्वावलम्बनाय नमः ।
ॐ परमार्थगुरवे नमः । ४५०
ॐ देवाय नमः ।
ॐ मालिने नमः ।
ॐ संसारसारथये नमः ।
ॐ रसाय नमः ।
ॐ रसज्ञाय नमः ।
ॐ सारज्ञाय नमः ।
ॐ कङ्कणीकृतवासुकये नमः ।
ॐ कृष्णाय नमः ।
ॐ कृष्णस्तुताय नमः ।
ॐ धीराय नमः । ४६०
ॐ मायातीताय नमः ।
ॐ विमत्सराय नमः ।
ॐ महेश्वराय नमः ।
ॐ महीभर्त्रे नमः ।
ॐ शाकल्याय नमः ।
ॐ शर्वरीपतये नमः ।
ॐ तटस्थाय नमः ।
ॐ कर्णदीक्षादाय नमः ।
ॐ सुराध्यक्षाय नमः ।
ॐ सुरारिघ्ने नमः । ४७०
ॐ ध्येयाय नमः ।
ॐ अग्रधुर्याय नमः ।
ॐ धात्रीशाय नमः ।

ॐ रुचये नमः ।
ॐ त्रिभुवनेश्वराय नमः ।
ॐ कर्माध्यक्षाय नमः ।
ॐ निरालम्बाय नमः ।
ॐ सर्वकाम्यफलप्रदाय नमः ।
ॐ अव्यक्तलक्षणाय नमः ।
ॐ व्यक्ताय नमः । ४८०
ॐ व्यक्ताव्यक्ताय नमः ।
ॐ विशाम्पतये नमः ।
ॐ त्रिलोकात्मने नमः ।
ॐ त्रिलोकेशाय नमः ।
ॐ जगन्नाथाय नमः ।
ॐ जनेश्वराय नमः ।
ॐ ब्रह्मणे नमः ।
ॐ हंसाय नमः ।
ॐ रुद्राय नमः ।
ॐ स्रष्ट्रे नमः । ४९०
ॐ हर्त्रे नमः ।
ॐ चतुर्मुखाय नमः ।
ॐ निर्मदाय नमः ।
ॐ निरहङ्काराय नमः ।
ॐ भृगुवंशोद्वहाय नमः ।
ॐ शुभाय नमः ।
ॐ वेधसे नमः ।
ॐ विधात्रे नमः ।
ॐ द्रुहिणाय नमः ।
ॐ देवज्ञाय नमः । ५००
ॐ देवचिन्तनाय नमः ।
ॐ कैलासशिखरावासिने नमः ।
ॐ ब्राह्मणाय नमः ।
ॐ ब्राह्मणप्रियाय नमः ।
ॐ अर्थाय नमः ।
ॐ अनर्थाय नमः ।
ॐ महाकोशाय नमः ।
ॐ ज्येष्ठाय नमः ।
ॐ श्रेष्ठाय नमः ।
ॐ शुभाकृतये नमः । ५१०
ॐ बाणारये नमः ।

ॐ दमनाय नमः ।
ॐ यज्वने नमः ।
ॐ स्निग्धप्रकृतये नमः ।
ॐ अग्नियाय नमः ।
ॐ वरशीलाय नमः ।
ॐ वरगुणाय नमः ।
ॐ सत्यकीर्तये नमः ।
ॐ कृपाकराय नमः ।
ॐ सत्त्ववते नमः । ५२०
ॐ सात्त्विकाय नमः ।
ॐ धर्मिणे नमः ।
ॐ बुद्धाय नमः ।
ॐ कल्कये नमः ।
ॐ सदाश्रयाय नमः ।
ॐ दर्पणाय नमः ।
ॐ दर्पघ्ने नमः ।
ॐ दर्पातीताय नमः ।
ॐ दृप्ताय नमः ।
ॐ प्रवर्तकाय नमः । ५३०
ॐ अमृतांशाय नमः ।
ॐ अमृतवपवे नमः ।
ॐ वाङ्मयाय नमः ।
ॐ सदसन्मयाय नमः ।
ॐ निधानगर्भाय नमः ।
ॐ भूशायिने नमः ।
ॐ कपिलाय नमः ।
ॐ विश्वभोजनाय नमः ।
ॐ प्रभविष्णवे नमः ।
ॐ ग्रसिष्णवे नमः । ५४०
ॐ चतुर्वर्गफलप्रदाय नमः ।
ॐ नारसिंहाय नमः ।
ॐ महाभीमाय नमः ।
ॐ शरभाय नमः ।
ॐ कलिपावनाय नमः ।
ॐ उग्राय नमः ।
ॐ पशुपतये नमः ।
ॐ भर्गाय नमः ।
ॐ वैद्याय नमः ।

ॐ केशिनिषूदनाय नमः । ५५०
ॐ गोविन्दाय नमः ।
ॐ गोपतये नमः ।
ॐ गोप्त्रे नमः ।
ॐ गोपालाय नमः ।
ॐ गोपवल्लभाय नमः ।
ॐ भूतावासाय नमः ।
ॐ गुहावासाय नमः ।
ॐ सत्यवासाय नमः ।
ॐ श्रुतागमाय नमः ।
ॐ निष्कण्टकाय नमः । ५६०
ॐ सहस्रार्चिषे नमः ।
ॐ स्निग्धाय नमः ।
ॐ प्रकृतिदक्षिणाय/लक्षणाय नमः ।
ॐ अकम्पिताय नमः ।
ॐ गुणग्राहिने नमः ।
ॐ सुप्रीताय नमः ।
ॐ प्रीतिवर्धनाय नमः ।
ॐ पद्मगर्भाय नमः ।
ॐ महागर्भाय नमः ।
ॐ वज्रगर्भाय नमः । ५७०
ॐ जलोद्भवाय नमः ।
ॐ गभस्तये नमः ।
ॐ ब्रह्मकृते नमः ।
ॐ ब्रह्मणे नमः ।
ॐ राजराजाय नमः ।
ॐ स्वयम्भवाय नमः ।
ॐ सेनान्ये नमः ।
ॐ अग्रण्ये नमः ।
ॐ साधवे नमः ।
ॐ बलाय नमः । ५८०
ॐ तालीकराय नमः ।
ॐ महते नमः ।
ॐ पृथिव्यै नमः ।
ॐ वायवे नमः ।
ॐ आब्भ्यः नमः ।
ॐ तेजसे नमः ।
ॐ खाय नमः ।

ॐ बहुलोचनाय नमः ।
ॐ सहस्रमूर्ध्ने नमः ।
ॐ देवेन्द्राय नमः । ५९०
ॐ सर्वगुह्यमयाय नमः ।
ॐ गुरवे नमः ।
ॐ अविनाशिने नमः ।
ॐ सुखारामाय नमः ।
ॐ स्त्रिलोकिने नमः ।
ॐ प्राणधारकाय नमः ।
ॐ निद्रारूपाय नमः ।
ॐ क्षमाय नमः ।
ॐ तन्द्राय नमः ।
ॐ धृतये नमः । ६००
ॐ मेधायै नमः ।
ॐ स्वधायै नमः ।
ॐ हविषे नमः ।
ॐ होत्रे नमः ।
ॐ नेत्रे नमः ।
ॐ शिवाय नमः ।
ॐ त्रात्रे नमः ।
ॐ सप्तजिह्वाय नमः ।
ॐ विशुद्धपादाय नमः ।
ॐ स्वाहायै नमः । ६१०
ॐ हव्याय नमः ।
ॐ कव्याय नमः ।
ॐ शतघ्निने नमः ।
ॐ शतपाशधृषे नमः ।
ॐ आरोहाय नमः ।
ॐ निरोहाय नमः ।
ॐ तीर्थाय नमः ।
ॐ तीर्थकराय नमः ।
ॐ हराय नमः ।
ॐ चराचरात्मने नमः । ६२०
ॐ सूक्ष्माय नमः ।
ॐ विवस्वते नमः ।
ॐ सवितामृताय नमः ।
ॐ तुष्टये नमः ।
ॐ पुष्टये नमः ।

ॐ कलायै नमः ।
ॐ काष्ठायै नमः ।
ॐ मासाय नमः ।
ॐ पक्षाय नमः ।
ॐ वासराय नमः । ६३०
ॐ ऋतवे नमः ।
ॐ युगादिकालाय नमः ।
ॐ लिङ्गाय नमः ।
ॐ आत्मने नमः ।
ॐ लिङ्गाय नमः ।
ॐ आत्मने नमः ।
ॐ शाश्वताय नमः ।
ॐ चिरञ्जीविने नमः ।
ॐ प्रसन्नात्मने नमः ।
ॐ नकुलाय नमः । ६४०
ॐ प्राणधारणाय नमः ।
ॐ स्वर्गद्वाराय नमः ।
ॐ प्रजाद्वाराय नमः ।
ॐ मोक्षद्वाराय नमः ।
ॐ त्रिविष्टपाय नमः ।
ॐ मुक्तये नमः ।
ॐ लक्ष्म्यै नमः ।
ॐ भुक्तये नमः ।
ॐ विरजसे नमः ।
ॐ विरजाम्बराय नमः । ६५०
ॐ विश्वक्षेत्राय नमः ।
ॐ सदाबीजाय नमः ।
ॐ पुण्यश्रवणकीर्तनाय नमः ।
ॐ भिक्षवे नमः ।
ॐ भैक्ष्याय नमः ।
ॐ गृहाय नमः ।
ॐ दाराभ्यः नमः ।
ॐ यजमानाय नमः ।
ॐ याचकाय नमः ।
ॐ पक्षिणे नमः । ६६०
ॐ पक्षवाहाय नमः ।
ॐ मनोवेगाय नमः ।
ॐ निशाचराय नमः ।

ॐ गजघ्ने नमः ।
ॐ दैत्यघ्ने नमः ।
ॐ नाकाय नमः ।
ॐ पुरुहूताय नमः ।
ॐ पुरुष्टुताय नमः ।
ॐ बान्धवाय नमः ।
ॐ बन्धुवर्गाय नमः । ६७०
ॐ पित्रे नमः ।
ॐ मात्रे नमः ।
ॐ सख्ये नमः ।
ॐ सुताय नमः ।
ॐ गायत्रीवल्लभाय नमः ।
ॐ प्रांशवे नमः ।
ॐ मान्धात्रे नमः ।
ॐ भूतभावनाय नमः ।
ॐ सिद्धार्थकारिणे नमः ।
ॐ सर्वार्थाय नमः । ६८०
ॐ छन्दसे नमः ।
ॐ व्याकरणाय नमः ।
ॐ श्रुतये नमः ।
ॐ स्मृतये नमः ।
ॐ गाथायै नमः ।
ॐ उपशान्ताय नमः ।
ॐ पुराणाय नमः ।
ॐ प्राणचञ्चुराय नमः ।
ॐ वामनाय नमः ।
ॐ जगत्कालाय नमः । ६९०
ॐ सुकृताय नमः ।
ॐ युगाधिपाय नमः ।
ॐ उद्गीथाय नमः ।
ॐ प्रणवाय नमः ।
ॐ भानवे नमः ।
ॐ स्कन्दाय नमः ।
ॐ वैश्रवणाय नमः ।
ॐ अन्तरात्मने नमः ।
ॐ हृषीकेशाय नमः ।
ॐ पद्मनाभाय नमः । ७००
ॐ स्तुतिप्रियाय नमः ।

ॐ परश्वधायुधाय नमः ।
ॐ शाखिने नमः ।
ॐ सिंहगाय नमः ।
ॐ सिंहवाहनाय नमः ।
ॐ सिंहनादाय नमः ।
ॐ सिंहदंष्ट्राय नमः ।
ॐ नगाय नमः ।
ॐ मन्दरधृके नमः ।
ॐ सरसे / शराय नमः । ७१०
ॐ सह्याचलनिवासिने नमः ।
ॐ महेन्द्रकृतसंश्रयाय नमः ।
ॐ मनसे नमः ।
ॐ बुद्धये नमः ।
ॐ अहङ्काराय नमः ।
ॐ कमलानन्दवर्धनाय नमः ।
ॐ सनातनतमाय नमः ।
ॐ स्रग्विणे नमः ।
ॐ गदिने नमः ।
ॐ शङ्खिने नमः । ७२०
ॐ रथाङ्गभृते नमः ।
ॐ निरीहाय नमः ।
ॐ निर्विकल्पाय नमः ।
ॐ समर्थाय नमः ।
ॐ अनर्थनाशनाय नमः ।
ॐ अकायाय नमः ।
ॐ भक्तकायाय नमः ।
ॐ माधवाय नमः ।
ॐ सुरार्चिताय नमः ।
ॐ योद्ध्रे नमः । ७३०
ॐ जेत्रे नमः ।
ॐ महावीर्याय नमः ।
ॐ शङ्कराय नमः ।
ॐ सन्तताय नमः ।
ॐ स्तुताय नमः ।
ॐ विश्वेश्वराय नमः ।
ॐ विश्वमूर्तये नमः ।
ॐ विश्वारामाय नमः ।
ॐ विश्वकृते नमः ।

ॐ आजानुबाहवे नमः । ७४०
ॐ सुलभाय नमः ।
ॐ पराय नमः ।
ॐ ज्योतिषे नमः ।
ॐ सनातनाय नमः ।
ॐ वैकुण्ठाय नमः ।
ॐ पुण्डरीकाक्षाय नमः ।
ॐ सर्वभूताशयस्थिताय नमः ।
ॐ सहस्रशीर्ष्णे नमः ।
ॐ पुरुषाय नमः ।
ॐ सहस्राक्षाय नमः । ७५०
ॐ सहस्रपादाय नमः ।
ॐ ऊर्ध्वरेतसे नमः ।
ॐ ऊर्ध्वलिङ्गाय नमः ।
ॐ प्रवराय नमः ।
ॐ वरदाय नमः ।
ॐ वराय नमः ।
ॐ उन्मत्तवेशाय नमः ।
ॐ प्रच्छन्नाय नमः ।
ॐ सप्तद्वीपमहीप्रदाय नमः ।
ॐ द्विजधर्मप्रतिष्ठात्रे नमः । ७६०
ॐ वेदात्मने नमः ।
ॐ वेदकृते नमः ।
ॐ श्रयाय नमः ।
ॐ नित्याय नमः ।
ॐ सम्पूर्णकामाय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ कुशलागमाय नमः ।
ॐ कृपापीयूषजलधये नमः ।
ॐ धात्रे नमः ।
ॐ कर्त्रे नमः । ७७०
ॐ परात्पराय नमः ।
ॐ अचलाय नमः ।
ॐ निर्मलाय नमः ।
ॐ तृप्ताय नमः ।
ॐ स्वे महिम्नि प्रतिष्ठिताय नमः ।
ॐ असहायाय नमः ।
ॐ सहायाय नमः ।

ॐ जगद्धेतवे नमः ।
ॐ अकारणाय नमः ।
ॐ मोक्षदाय नमः । ७८०
ॐ कीर्तिदाय नमः ।
ॐ प्रेरकाय नमः ।
ॐ कीर्तिनायकाय नमः ।
ॐ अधर्मशत्रवे नमः ।
ॐ अक्षोभ्याय नमः ।
ॐ वामदेवाय नमः ।
ॐ महाबलाय नमः ।
ॐ विश्ववीर्याय नमः ।
ॐ महावीर्याय नमः ।
ॐ श्रीनिवासाय नमः । ७९०
ॐ सतां गतये नमः ।
ॐ स्वर्णवर्णाय नमः ।
ॐ वराङ्गाय नमः ।
ॐ सद्योगिने नमः ।
ॐ द्विजोत्तमाय नमः ।
ॐ नक्षत्रमालिने नमः ।
ॐ सुरभये नमः ।
ॐ विमलाय नमः ।
ॐ विश्वपावनाय नमः ।
ॐ वसन्ताय नमः । ८००
ॐ माधवाय नमः ।
ॐ ग्रीष्माय नमः ।
ॐ नभस्याय नमः ।
ॐ बीजवाहनाय नमः ।
ॐ निदाघाय नमः ।
ॐ तपनाय नमः ।
ॐ मेघाय नमः ।
ॐ नभसे नमः ।
ॐ योनये नमः ।
ॐ पराशराय नमः । ८१०
ॐ सुखानिलाय नमः ।
ॐ सुनिष्पन्नाय नमः ।
ॐ शिशिराय नमः ।
ॐ नरवाहनाय नमः ।
ॐ श्रीगर्भाय नमः ।

ॐ कारणाय नमः ।
ॐ जप्याय नमः ।
ॐ दुर्गाय नमः ।
ॐ सत्यपराक्रमाय नमः ।
ॐ आत्मभुवे नमः । ८२०
ॐ अनिरुद्धाय नमः ।
ॐ दत्तात्रेयाय नमः ।
ॐ त्रिविक्रमाय नमः ।
ॐ जमदग्नये नमः ।
ॐ बलनिधये नमः ।
ॐ पुलस्त्याय नमः ।
ॐ पुलहाय नमः ।
ॐ अङ्गिरसे नमः ।
ॐ वर्णिने नमः ।
ॐ वर्णगुरवे नमः । ८३०
ॐ चण्डाय नमः ।
ॐ कल्पवृक्षाय नमः ।
ॐ कलाधराय नमः ।
ॐ महेन्द्राय नमः ।
ॐ दुर्भराय नमः ।
ॐ सिद्धाय नमः ।
ॐ योगाचार्याय नमः ।
ॐ बृहस्पतये नमः ।
ॐ निराकाराय नमः ।
ॐ विशुद्धाय नमः । ८४०
ॐ व्याधिहर्त्रे नमः ।
ॐ निरामयाय नमः ।
ॐ अमोघाय नमः ।
ॐ अनिष्टमथनाय नमः ।
ॐ मुकुन्दाय नमः ।
ॐ विगतज्वराय नमः ।
ॐ स्वयंज्योतिषे नमः ।
ॐ गुरुतमाय नमः ।
ॐ सुप्रसादाय नमः ।
ॐ अचलाय नमः । ८५०
ॐ चन्द्राय नमः ।
ॐ सूर्याय नमः ।
ॐ शनये नमः ।

ॐ केतवे नमः ।
ॐ भूमिजाय नमः ।
ॐ सोमनन्दनाय नमः ।
ॐ भृगवे नमः ।
ॐ महातपसे नमः ।
ॐ दीर्घतपसे नमः ।
ॐ सिद्धाय नमः । ८६०
ॐ महागुरवे नमः ।
ॐ मन्त्रिणे नमः ।
ॐ मन्त्रयित्रे नमः ।
ॐ मन्त्राय नमः ।
ॐ वाग्मिने नमः ।
ॐ वसुमनसे नमः ।
ॐ स्थिराय नमः ।
ॐ अद्रये नमः ।
ॐ अद्रिशयाय नमः ।
ॐ शम्भवे नमः । ८७०
ॐ माङ्गल्याय नमः ।
ॐ मङ्गलाय नमः ।
ॐ अवृताय नमः ।
ॐ जयस्तम्भाय नमः ।
ॐ जगत्स्तम्भाय नमः ।
ॐ बहुरूपाय नमः ।
ॐ गुणोत्तमाय नमः ।
ॐ सर्वदेवमयाय नमः ।
ॐ अचिन्त्याय नमः ।
ॐ देवतात्मने नमः । ८८०
ॐ विरूपधृषे नमः ।
ॐ चतुर्वेदाय नमः ।
ॐ चतुर्भावाय नमः ।
ॐ चतुराय नमः ।
ॐ चतुरप्रियाय नमः ।
ॐ आद्यन्तशून्याय नमः ।
ॐ वैकुण्ठाय नमः ।
ॐ कर्मसाक्षिणे नमः ।
ॐ फलप्रदाय नमः ।
ॐ दृढायुधाय नमः । ८९०
ॐ स्कन्दगुरवे नमः ।

ॐ परमेष्ठिने नमः ।
ॐ परायणाय नमः ।
ॐ कुबेरबन्धवे नमः ।
ॐ श्रीकण्ठाय नमः ।
ॐ देवेशाय नमः ।
ॐ सूर्यतापनाय नमः ।
ॐ अलुब्धाय नमः ।
ॐ सर्वशास्त्रज्ञाय नमः ।
ॐ शास्त्रार्थाय नमः । ९००
ॐ परमाय नमः ।
ॐ पुंसे नमः ।
ॐ अग्न्यास्याय नमः ।
ॐ पृथिवीपादाय नमः ।
ॐ द्युमूर्धघ्ने नमः ।
ॐ दिक्श्रुतये नमः ।
ॐ पराय नमः ।
ॐ सोमान्ताय नमः ।
ॐ करणाय नमः ।
ॐ ब्रह्ममुखाय नमः । ९१०
ॐ क्षत्रभुजाय नमः ।
ॐ वैश्योरवे नमः ।
ॐ शूद्रपादय नमः ।
ॐ नद्ये नमः ।
ॐ सर्वाङ्गसन्धिकाय नमः ।
ॐ जीमूतकेशाय नमः ।
ॐ अब्धिकुक्षये नमः ।
ॐ वैकुण्ठाय नमः ।
ॐ विष्टरश्रवसे नमः ।
ॐ क्षेत्रज्ञाय नमः । ९२०
ॐ तमसाय नमः ।
ॐ पारिणे नमः ।
ॐ भृगुवंशोद्भवाय नमः ।
ॐ अवनये नमः ।
ॐ आत्मयोनये नमः ।
ॐ रैणुकेयाय नमः ।
ॐ महादेवाय नमः ।
ॐ गुरवे नमः ।
ॐ सुराय नमः ।

ॐ एकाय नमः । ९३०
ॐ नैकाय नमः ।
ॐ अक्षराय नमः ।
ॐ श्रीशाय नमः ।
ॐ श्रीपतये नमः ।
ॐ दुःखभेषजाय नमः ।
ॐ हृषीकेशाय नमः ।
ॐ भगवते नमः ।
ॐ सर्वात्मने नमः ।
ॐ विश्वपावनाय नमः ।
ॐ विश्वकर्मणे नमः । ९४०
ॐ अपवर्गाय नमः ।
ॐ लम्बोदरशरीरधृषे नमः ।
ॐ अक्रोधाय नमः ।
ॐ अद्रोहाय नमः ।
ॐ मोहाय नमः ।
ॐ सर्वतोऽनन्तदृशे नमः ।
ॐ कैवल्यदीपाय नमः ।
ॐ कैवल्याय नमः ।
ॐ साक्षिणे नमः ।
ॐ चेतसे नमः । ९५०
ॐ विभावसवे नमः ।
ॐ एकवीरात्मजाय नमः ।
ॐ भद्राय नमः ।
ॐ अभद्रघ्ने नमः ।
ॐ कैटभार्दनाय नमः ।
ॐ विबुधाय नमः ।
ॐ अग्रवराय नमः ।
ॐ श्रेष्ठाय नमः ।
ॐ सर्वदेवोत्तमोत्तमाय नमः ।
ॐ शिवध्यानरताय नमः । ९६०
ॐ दिव्याय नमः ।
ॐ नित्ययोगिने नमः ।
ॐ जितेन्द्रियाय नमः ।
ॐ कर्मसत्याय नमः ।
ॐ व्रताय नमः ।
ॐ भक्तानुग्रहकृते नमः ।
ॐ हरये नमः ।

ॐ सर्गस्थित्यन्तकृते नमः ।
ॐ रामाय नमः ।
ॐ विद्याराशये नमः । ९७०
ॐ गुरूत्तमाय नमः ।
ॐ रेणुकाप्राणलिङ्गाय नमः ।
ॐ भृगुवंश्याय नमः ।
ॐ शतक्रतवे नमः ।
ॐ श्रुतिमते नमः ।
ॐ एकबन्धवे नमः ।
ॐ शान्तभद्राय नमः ।
ॐ समञ्जसाय नमः ।
ॐ आध्यात्मविद्यासाराय नमः ।
ॐ कालभक्षाय नमः । ९८०
ॐ विशृङ्खलाय नमः ।
ॐ राजेन्द्राय नमः ।
ॐ भूपतये नमः ।
ॐ योगिने नमः ।
ॐ निर्मायाय नमः ।
ॐ निर्गुणाय नमः ।
ॐ गुणिने नमः ।
ॐ हिरण्मयाय नमः ।
ॐ पुराणाय नमः ।
ॐ बलभद्राय नमः । ९९०
ॐ जगत्प्रदाय नमः ।
ॐ वेदवेदाङ्गपारज्ञाय नमः ।
ॐ सर्वकर्मणे नमः ।
ॐ महेश्वराय नमः ।
ॐ परशुधारिणे नमः ।
ॐ भृगुनन्दनाय नमः ।
ॐ विष्णवे नमः ।
ॐ सह्याद्रिवासिने नमः ।
ॐ क्षत्रजिते नमः ।
ॐ पृथिवीपतये नमः । १०००
ॐ मातृजीवकाय नमः ।
ॐ गोत्राणकृते नमः ।
ॐ गोप्रदात्रे नमः ।
ॐ ब्रह्मविष्णुशिवात्मकाय नमः ।
ॐ अव्यक्तव्यक्तरूपिणे नमः ।

ॐ समस्तजगदाधारमूर्तये नमः ।
ॐ कोङ्कणासुताय नमः ।
ॐ श्रीपरशुरामाय नमः । १००८

इति श्रीपरशुरामसहस्रनामावलिः समाप्ता ।